॥ ब्रह्मबिन्दूपनिषत् ११ ॥

॥ ब्रह्मबिन्दूपनिषत् ॥ 11
अमृतबिन्दूपनिषद्वेद्यं यत्परमाक्षरम् ।
तदेव हि त्रिपाद्रामचन्द्राख्यं नः परा गतिः ॥

ॐ सहनाववत्विति शान्तिः ॥

ॐ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥ १॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ २॥

यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
तस्मान्निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३॥

निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि ।
यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥ ४॥

तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च अतोऽन्यो ग्रन्थविस्तरः ॥ ५॥

नैव चिन्त्यं न वाचिन्त्यमचिन्त्यं चिन्त्यमेव च ।
पक्षपात विनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥ ६॥

स्वरेण सन्ध्ययेद्योगमस्वरं भावयेत्परम् ।
अस्वरेण हि भावेन भावो नाभाव इष्यते ॥ ७॥

तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ ८॥

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिं च ज्ञात्वा च परमं शिवम् ॥ ९॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १०॥

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ ११॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२॥

घटसंवृतमाकाशं लीयमाने घटे यथा ।
घटो लीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ १३॥

घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भग्नं न च जानाति स जानाति च नित्यशः ॥ १४॥

शब्दमायावृतो यावत्तावत्तिष्ठति पुष्करे ।
भिन्ने तमसि चैकत्वमेक एवानुपश्यति ॥ १५॥

शब्दाक्षरं परं ब्रह्म तस्मिन्क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥ १६॥

द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७॥

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८॥

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९॥

घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ २०॥

ज्ञाननेत्रं समाधाय चोद्धरेद्वह्निवत्परम् ।
निष्कलं निर्मलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१॥

सर्वभूताधिवासं च यद्भूतेषु वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः तदस्म्यहं वासुदेव
इति ॥ २२॥

ॐ सहनाववत्विति शान्तिः ॥

